अथ हेमाद्रि प्रयोगः ॥ सुमुखश्चैकदन्तश्च कपिलोगजकर्णकः लम्बोदरश्चविकटोविघ्ननाशोविनायकः धूम्रकेतुर्गणाध्यक्षो भालचन्द्रोगजाननः द्वादशैतानिनामानि यःपठेच्छृणुयादपि विद्यारम्भेविवाहेच प्रवेशेनिर्गमेतथा संग्रामेसङ्कटेचैव विघ्नस्तस्यनजायते शुक्लाम्बरधरंविष्णुं शशिवर्णंचतुर्भुजं प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशान्तये ४ अभीप्सितार्थसिध्यर्थं पूजितोयःसुरासुरैः सर्वविघ्नहरेतस्मै श्रीगणाधिपतयेनमः वक्रतुण्डमहाकाय सूर्यकोटिसमप्रभ अविघ्नंकुरुमेदेव सर्वकार्येषुसर्वदा ॥ ६ ॥ वागीशाद्यासुमनसः सर्वार्थानामुपक्रमे ॥ यन्नत्वाकृतकृत्यास्यु स्तन्नमामिगजाननं ॥ ७ ॥ गणनाथंनमस्कृत्य नमस्कृत्यपितामहं ॥ विष्णुरुद्रंश्रियंदेवीं वन्देभक्त्यासरस्वतीं ॥८॥ स्थानक्षेत्रंनमस्कृत्य दिननाथंनिशाकरं ॥ धरणीगर्भसम्भूतं शशिपुत्रंबृहस्पतिं ॥ ९ ॥ दैत्याचार्यंनमस्कृत्य सूर्यपुत्रंशनैश्चरं ॥ राहुंकेतुंनमस्कृत्य यज्ञारम्भेविशेषतः ॥१०॥ शक्रादिदेवताःसर्वाः ऋषींश्चैवतपोधनान् गर्गंमुनिंनमस्कृत्य नारदंपर्वतंतथा ॥११॥ वसिष्ठंमुनिशार्दूलं विश्वामित्रञ्चगोभिलं॥ अगस्त्यञ्चपुलस्त्यञ्च दक्षमित्रंपराशरं॥ भरद्वाजञ्चमाण्डव्यं याज्ञवल्क्यञ्चगालवं ॥ १२॥ अन्येविप्रास्तपोयुक्ता वेदशास्त्रविचक्षणा ॥ १३ ॥ तान्सर्वान् प्रणिपत्याहं शुभकर्म्मसमारभे ॥ लाभस्तेषां जयस्तेषां कुतस्तेषांपराजयः ॥ येषामिन्दीवरःश्यामो हृदयस्थोजनार्दनः ॥ अग्रतःश्रीनृसिंह

स्य दृष्टतोदेवकीसुतः ॥ रक्षतांपार्श्वयोर्देवौ भ्रा
तरौरामलक्ष्मणौ ॥ १५ ॥ ओम् स्वस्तिश्रीमुकु
न्द सच्चिदानन्दस्य ब्रह्मणोऽनिर्वाच्यमाया शक्ति
विजृम्भित अविद्यायोगात्कालकर्म्मस्वभावाविर्भूत
महत्तत्वोदिताहङ्कारत्तीयोद्भूत वेदादिपञ्चके
न्द्रियदेवतानिर्मितोडुकटाहे चतुर्दशलोकात्मके
लीलयातन्मध्यवर्तिभगवतः श्रीनारायणस्यनाभि
कमलोद्भूतसकललोकपितामहस्य ब्रह्मणः सृष्टिंकु
र्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य समस्तजगदु
त्पत्तिः स्थितिलयकारणस्यरक्षाशिक्षाविचक्षण
स्यप्रणतपारिजातस्य अच्युतानन्तवीर्यस्य श्रीम
द्भवगतो महापुरुषस्य श्रीमदादि नारायणस्य
अचिन्त्या परिमितशक्त्याध्येयमानस्य महाजलौ
घमध्ये परिभ्रममाणानामनेककोटिब्रह्मांडानां
मेकतमेरव्यक्तमहदंकारपृथिव्यप्तेजोवाय्वाकाशा
द्यकरणैरावृते अस्मिन्महति ब्रह्माण्डखण्डयो
र्मध्ये आधारशक्ति श्रीमदादिवाराह दंष्ट्राग्रवि
राजिते कूर्मानन्तवासुकि तक्षक कुलिककर्कोट
क पद्ममहापद्मशंखाद्यष्टमहानागैः ॥ संधियमा
णे ऐरावत पुण्डरीक वामन कुमुदांजन पुष्प
दन्त सार्वभौम सुप्रती काष्टदिग्गज परिप्रतिष्ठि
तस्य अतल वितल सुतल तलातल रसातल
महातल पाताल लोकस्योपरिभागे भूर्लोक
भुवर्लोक स्वर्लोक महर्लोक जनलोक तपलोक
सत्यलोकादि सप्तलोकस्याधोभागे चक्रवालशैल
महावलय नगमध्यवर्तिनो महाकाल महाफणि
राजशेषस्य सहस्र फणानांमणिमण्डल मण्डिते

दिग्दन्ति शुण्डोत्तंभिते अमरावती भोगवती सिद्धवती गान्धर्व्ववती कांच्यवन्त्यलकावती यशो वतीति पुण्यपुरीप्रविष्ठिते इन्द्राग्नियमनिर्ऋति वरुण वायु कुवेरे शानेतिदिक्पालप्रतिष्ठितेलो कालोकाचलवलयिते लवणेक्षुसुरासर्पिदधिक्षी रोदकेतिसप्तार्णवपरिवृते जम्बुप्लक्षशाल्मलिकु शक्रौञ्चशाकपुष्कराख्य सप्तद्वीपयुते इन्द्रकांस्य ताम्रगभस्तिनागसौम्यगन्धर्वचारणभारतेति न वखण्ड मण्डिते सुवर्णगिरि कर्णिकोपेत महा सरोरुहाकार पञ्चाशत कोटि योजन विस्तीर्ण भूमण्डले अयोध्या मथुरा माया काशीकांच्य वन्तिका द्वारावतीतिसप्तपुरीप्रतिष्ठिते शालग्रा म शम्भल नन्दिग्रामेति ग्रामत्रयविराजिते चम्प कारण्य वदरिकारण्य दण्डकारण्या वृंदारण्य धर्मारण्य पद्मारण्य गुह्यारण्य जम्बुकारण्या दीनांमध्ये नैमिषारण्ये सुमेरु निषद रजत कूट शुम्भकूट श्रीकूट हिमाचलाना हरिवर्षकिं पुरुषवर्षयोश्च दक्षिणे नवसहस्रस्र योजन विस्तीर्णे भरतखण्डे मलयाचल सह्याचल विं ध्याचलानामुत्तरेण स्वर्णप्रस्थ चण्डप्रस्थ सूक्षिक आवर्तक रमणक महारमणक पाञ्चजन्य सिंह ल लङ्केति नवखण्डोपद्वीपमण्डिते दक्षिणाव स्थितरेणुकाद्वयसूकर: काशी काञ्ची कालि काल वटेश्वर कालञ्जर महाकालेति नवोखर युते द्वादशज्योतिलिङ्ग गङ्गा यमुना सरस्वतीन र्मदा तापी पयोष्णी कावेरी त्यादिपुण्यनदी विलसिते हिमवन्मेरुगोवर्द्धनक्रौञ्च श्रीशैलकचि

लकूट हेमकूट महेन्द्र मलय सह्य विंध्य पा
रिपात्राद्यनेकपर्वत समन्विते मतङ्ग माल्यव
किष्किन्ध ऋष्यमूकेति पञ्चमहानगरयुते को
कन्त हिरण्यशृङ्गकुब्जाबुद मणिकर्णी वट शा
लग्राम सूकर मथुरा गया निष्क्रमण लोहा
र्गल पोतस्वामी प्रभास बदरीतिचतुर्दशगु
ह्यविलसिते जंबुद्वीपे कर्मभूमौस्वाख्यवर्ती स्व
र्गस्थितामराद्यासितावतारे गङ्गादिसरिद्भिः
पाविते भारतेवर्षे निखिलजनपावनपरम भाग
वतोत्तमशौनकादि निवासिते नैमिषारण्ये
आर्यावर्तान्तरगत ब्रह्मावर्तैकदेशे जनपदे कुरु
क्षेत्रादिमध्यरेखायाः अमुकदिग्भागे गङ्गायाः
अमुकतटे अमुकक्षेत्रान्तरवर्तिसीम सूर्या
न्वयभूभृत्प्रतिष्ठिते श्रीमन्नारायणनाभि कम
लोद्भूतसकलजगत्स्रष्टुः परार्द्धद्वयजीविनोब्रह्म
णोद्वितीयपरार्द्धे पञ्चाशदधिकेवर्षे प्रथममासे
प्रथमपक्षे प्रथमदिवसे अह्नोद्वितीययामे तृतीये
मुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानांमध्ये अष्टमे
श्वेतवराहकल्पे स्वायंभुवादिमन्वन्तराणांमध्येस
प्तमेवैवस्वतमन्वन्तरे सद्युगादिचतुर्युगानांमध्ये
अष्टाविंशतिमेकलियुगे तत्प्रथमविभागे संवत्स
राणांव्यतिक्रांतानांधनुसाहस्रासप्तत्यधिकायांत
दुपरिवर्तमाने श्रीमन्नृपविक्रमार्कसमयातीतसं
वत्सप्तदशशताधिक यथासंख्यागमे चान्द्र सावन
सौरनक्षत्रादि प्रमित प्रभवादि षष्टिसंवत्सरा
णांअमुक नाम्निसंवत्सरे उत्तरगोलावलंबिनिश्री
मार्तण्डमण्डले अमुक ऋतौ अमुक मासे अमु